५ चक्रः—नमो भगवते नारायणाय । भगवन् ! महाविष्णो !

कार्याण्यकार्याण्यमरा†सुराणां
त्वया भविष्यन्ति बहूनि‡ लोके ।
तस्माज्जनस्यास्य लघुत्वयोगात्
कुरु प्रसादं यदुवंशकेतो ! ॥२८॥

१ वसुदेवः—गृह्यताम् ।

२ नन्दगोपः—जं भट्टा आणवेदि (*गृह्णाति*) [ यद् भर्ताज्ञापयति । ]

३ वसुदेवः—वयस्य ! प्रभाता रजनी । प्रतिनिवर्तताां भवान् ।

४ नन्दगोपः—अच्छलीअं अच्छलीअं भट्टा ! अच्छलीअं । इमे बन्धणे पडिदे । [ आश्चर्यमाश्चर्यं भर्तः ! आश्चर्यम् । इमे बन्धने पतिते । ]

५ वसुदेवः—सर्वमेतत् कुमारस्य प्रभावः । प्रतिनिवर्ततां भवान् ।

६ नन्दगोपः—जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ]

७ वसुदेवः—अथवा एहि तावत् ।

८ नन्दगोपः—भट्टा ! अअम्हि । [ भर्तः ! अयमस्मि । ]

---

५ चक्र—भगवान् नारायण को नमस्कार । भगवन् ! महाविष्णो !
देवताओं के कार्यों को करते हो और दैत्यों के कुकर्मों का संहार करते हो । यह सब काम तुम्हारे ही हाथ से होंगे । हे यदुवंश के केतु ! आप इस व्यक्ति के छोटे से कार्य से प्रसन्न हों ॥२८॥

१ वसुदेव—ग्रहण करो ।

२ नन्दगोप—जैसी भर्ता आज्ञा देते हैं । (*ग्रहण करता है*)

३ वसुदेव—मित्र, सुबह हो गई है । आप लौट जाइए ।

४ नन्दगोप—भर्ता, आश्चर्य है, आश्चर्य है । यह दोनों बन्धन गिर पड़े हैं ।

५ वसुदेव—यह सब कुमार का प्रभाव है । आप लौट जायें ।

६ नन्दगोप—जैसे भर्ता आज्ञा देते हैं ।

७ वसुदेव—अथवा इधर आ जाओ ।

८ नन्दगोप—भर्ता, यह मैं हूँ ।

---

†एय (खिला) मराणां इति पाभे.
‡ब (ल ? ला) नि इति पाभे.

वसुदेवः—

जाने नित्यं वत्सलं त्वां प्रकृत्या
स्नेहोऽप्यस्मिन्नर्थ्यते रूढभावः ।
अस्मिन् काले दग्धभूयिष्ठशेषं
न्यस्तं बीजं रक्षितुं यादवानाम् ॥२९॥

१ कुमारस्य किं करिष्यति भवान् ।

२ नन्दगोपः—सुणादु भट्टा । एक्कर्षिं गेहे गच्छिअ खीरं पिबइ, अण्णर्षिं गेहे गच्छिअ दधिं भक्खइ । अपरर्षिं गेहे गच्छिअ णवणीदं गिलइ । अण्णर्षिं गेहे गच्छिअ पाअषं भुञ्जइ । इदलर्षिं गेहे गच्छिअ तक्कघटं पलोअदि । किं बहुणा, अम्हाणं घोषष्प पदी होइ । [ शृणोतु भर्ता । एकस्मिन् गेहे गत्वा क्षीरं पिबति । अन्यस्मिन् गेहे गत्वा दधि भक्षयति । अपरस्मिन् गेहे गत्वा नवनीतं गिलति । अन्यस्मिन् गेहे गत्वा पायसं भुङ्क्ते । इतरस्मिन् गेहे गत्वा तक्रघटं प्रलोकते । किं बहुना, अस्माकं घोषस्य पतिर्भवति । ]

३ वसुदेवः—एवमस्तु । प्रतिनिवर्ततां भवान् ।

४ नन्दगोपः—जं भट्टा आणवेदि *( निष्क्रान्तः )* [ यद् भर्ताज्ञापयति ]

५ वसुदेवः—ननु निर्गतो नन्दगोपः ! यावदहमपि मधुरामेव यास्यामि ।

---

वसुदेव—

तुम्हें स्वभाव से ही मैं नित्य भक्त वत्सल जानता हूँ । उस वत्सल में बढ़ते हुए स्वरूप वाला प्रेम देखना चाहता हूँ । इस समय बहुत जलने के बाद बचे हुए यादवों के बीज रूप इस धरोहर कृष्ण की रक्षा करने की प्र.र्थना करता हूँ ॥२९॥

१ कुमार की रक्षा के लिये आप क्या करेंगे ?

२ नन्दगोप—स्वामिन् ! सुनो । एक घर में जाकर दूध पीएगा, दूसरे घर में दही खायेगा और अन्य घर में जाकर मक्खन खायेगा । तीसरे घर में जाकर खीर खायेगा और अन्य घर में जाकर मट्ठा टटोलेगा । अधिक क्या कहूँ, वह हमारी गोपबस्ती का स्वामी होगा ।

३ वसुदेव—ऐसे ही हो, आप लौट जायें ।

४ नन्दगोप—जैसे स्वामी आज्ञा देते हैं । *( चला जाता है )*

५ वसुदेव—अब नन्दगोप चला गया है । मैं भी मथुरा की तरफ चलता हूँ ।

( *परिक्रम्य* ) रुदितशब्द इव श्रूयते। किं नु खलु कंसभयात् प्रतिनिवृत्तो नन्दगोपः। ( *परिक्रम्य* ) अये प्रत्यागतप्राणेयं दारिका। यावदिमां गृहीत्वा देवक्या हस्ते निक्षिप्य दुरात्मानं कंसं वञ्चयामि। ( *गृहीत्वा* ) अहो गुरुत्वमस्याः। एतदपि कुमारात् किञ्चिदन्तरं महद्भूतम्। यावदपक्रामामि। अये इयं भगवती यमुना तथैव स्थिता। यावदपक्रामामि। निष्क्रान्तोऽस्मि यमुनायाः। एतन्नगरद्वारम्। तथैव प्रसुप्तो मधुरायां सर्वो जनः। यावत् प्रविशामि ( *प्रविश्य* ) इदं खलु दुरात्मनः कंसस्य गृहं ज्येष्ठाश्रितमिव दृश्यते। इदमस्मदीयं गृहं श्रियारूढमिव दृश्यते। यावदहमप्यन्तःपुरं प्रविश्य देवकीं समाश्वासयामि। ईश्वराः स्वस्ति कुर्वन्तु ( *निष्क्रान्तः* )

## प्रथमोऽङ्कः।

---

( *घूमकर* ) रोने का शब्द सुनाई दे रहा है। क्या कंस के डर से नन्दगोप लौट आया है ? ( *घूमकर* ) अरे यह बच्ची फिर जीवित हो गई है, मैं इसे देवकी के हाथों में सौंपकर दुरात्मा कंस को ठग लूंगा। ( *उठाकर* ) अरे यह कितना भारी है ? यह भी कुमार से कुछ ही भारी हो गई है। अच्छा तो मैं चलता हूँ। अरे भगवती यमुना वैसे ही रुकी है, तो मैं आगे बढ़ता हूँ। मैं यमुना पार हो गया हूँ। यह नगर का दरवाज़ा है। मथुरा में सब लोग सोये पड़े हैं। मैं प्रवेश करता हूँ ( *प्रवेश करके* ) यह दुरात्मा कंस का बड़े व्यक्तियों से युक्त घर दीख रहा है। यह हमारा शोभा युक्त घर है। मैं भी रनिवास में प्रवेश करके देवकी को धीरज दूंगा। ईश्वर कल्याण करें। ( *प्रस्थान* )

( प्रथम अंक समाप्त )

---

# अथ द्वितीयोऽङ्कः

१ *( ततः प्रविशन्ति चण्डालयुवतयः )*

२ सर्वाः—आअच्छ भट्टा ! आअच्छ । अम्हाणं कण्णाणं तुए सह विवाहो होदु [ आगच्छ भर्तः ! आगच्छ । अस्माकं कन्यानां त्वया सह विवाहो भवतु ]

३ *( ततः प्रविशति राजा )*

४ राजा—भोः ! किन्नु खल्विदम् ।

यन्मेदिनी प्रचलिता पतिताग्रहर्म्या
सन्तारनौरिव विकीर्णमहोर्मिमाला ।
सेव्यैः प्रधानगुणकर्मफलैर्निमित्तैः
किं वाग्रतो व्यसनमभ्युदयो नु तन्मे ॥१॥

१ सर्वाः—आअच्छ भट्टा ! आअच्छ । अम्हाणं कण्णआणं तुए सह विवाहो होदु [ आगच्छ । भर्तः ! आगच्छ । अस्माकं कन्यकानां त्वया सह विवाहो भवतु ]

---

१ *( चाण्डाल तरुणियां प्रवेश करती हैं )*

२ सब—भर्ता, आओ । आओ । हमारी कन्याओं का तुम्हारे साथ विवाह होगा ।

३ *( राजा का प्रवेश )*

४ राजा—अरे यह क्या है ?

बिखर रही बड़ी-बड़ी तरंगों की मालाओं तथा तैरने वाली नौका की तरह यह पृथ्वी मुझे चलायमान दीखती है और इस पृथ्वी के राजप्रासादों के शिखर मानो गिर रहे हैं। प्रधान गुण, कर्म फल वाले सेवा प्रसूत शकुनों से न मालूम कोई कल्याण आने वाला है या भविष्य में मुसीबत आने वाली है ॥१॥

१ सब—भर्ता आओ । आओ । हमारी कन्याओं का तुम्हारे साथ विवाह होगा ।

राजा—

यस्मान्न रक्षिपुरुषाः प्रचरन्ति केचिद्
यस्मान्न दीपकधराः प्रमदाश्चरन्ति ।
तस्मादिमा मम गृहं समनुप्रविष्टा
नीलोत्पलाञ्जननिभा भयदाः श्वपाक्यः ॥२॥

१ सर्वाः—आअच्छ भट्टा ! आअच्छ । अम्हाणं कण्णआणं तुए सह विवाहो होदु [ आगच्छ भर्तः ! आगच्छ । अस्माकं कन्यकानां त्वया सह विवाहो भवतु ]

२ राजा—अहो सृष्टाः खल्वेताश्चण्डालयुवतयः—

क्रोधेन नश्यति सदा मम शत्रुपक्षः
सूर्यः शशो हुतवहश्च वशे स्थिता मे ।
योऽहं यमस्य च यमो भयदो भयस्य
तं मापवादवचनैः परिधर्षयन्ति ॥३॥

१ सर्वाः—आअच्छ भट्टा ! आअच्छ [ आगच्छ भर्तः ! आगच्छ ]

२ राजा—आ अपध्वंस*। कथं सहसैव नष्टाः । यावदिदानीमभ्यन्तरमेव

---

राजा—
कोई पहरा देने वाले नहीं घूम रहे । न कोई स्त्री हाथ में दीपक लेकर खड़ी है । इसलिए नीलोत्पल ( नीलकमल ) और अञ्जन की तरह डरावनी ये चाण्डालिनियाँ मेरे घर में घुस आई हैं ॥२॥

१ सब—भर्ता आओ, आओ । हमारी लड़कियों का तुम्हारे साथ विवाह होगा ।

२ राजा—यह चण्डालिनी युवतियां कितनी ढीठ हैं ।
मेरा शत्रु-लो हमेशा मेरे क्रोध मात्र से ही नष्ट हो जाता है । सूर्य चन्द्रमा और अग्नि मेरे वश में रहते हैं । मैं यम का यम हूँ और भय का भय हूँ । चण्डाल युवतियां निन्दित वचनों से तिरस्कार कर रही हैं ॥३॥

१ सब—आओ, भर्ता आओ ।

२ राजा—अरी नष्ट हो जाओ, क्या इतनी जल्दी कहीं नष्ट हो गईं ? अच्छा,

---

*अवध्वंसा इति प. मे

प्रविशामि ।

३ *( ततः प्रविशति शापः )*

४ शापः—हं, क्वेदानीं प्रविशसि । इदं खलु मम गृहं संवृत्तम् ।

राजा—

**कोऽयं विनिष्पतति गर्भगृहं विगाह्य**
**उल्कां प्रगृह्य सहसाञ्जनराशिवर्णः ।**
**भीमोग्रदंष्ट्रवदनो ह्यहिपिङ्गलाक्षः**
**क्रोधो महेश्वरमुखादिव गां प्रपन्नः ।।४।।**

१ को भवान् ।

२ शापः—किं न जानीषे माम् । अहं खलु मधूकस्य ऋषेः शापो वज्रबाहुर्नाम ।

**श्मशानमध्यादहमागतोऽस्मि**
**चण्डालवेषेण विरूपचण्डम् ।**

---

अब मैं अन्दर चलता हूँ ।

३ *( शाप का प्रवेश )*

४ शाप—हम्, अरे कहाँ घुसे जा रहे हो । यह घर तो अब मेरा हो गया है ।

राजा—

**यह कौन एकदम घर के अन्दर घुसता जा रहा है ? अंगार को हाथ में लिये काले सुर्मे के ढेर की तरह इसका रंग है । इसका मुख अब डरावने और बड़े-बड़े दांतों से युक्त है । इसकी आंखें सांप की तरह पीली हैं । मानो यह शिव के मुख से निकलता हुआ क्रोध साक्षात् पृथ्वी पर आया है ।।४।।**

१ तुम कौन हो ।

२ शाप—क्या तुम मुझे नहीं जानते हो । मैं मधूक ऋषि का वज्रबाहु नामक शाप हूँ ।

**चण्डरूप धारण करके चण्डाल के वेश में मैं श्मशान में सेआ रहा हूँ । कपाल-माला को धारण करने से मेरा वेश विचित्र है, मैं कंस राजा के हृदय में**

कपालमालातिविचित्रवेषः
कंसस्य राज्ञो हृदयं प्रवेष्टुम् ॥५॥

१ कंसः—असम्भाव्यमर्थं प्रार्थयसि।

सौवर्णकान्ततरकन्दरकूटकुञ्जं
मेरुं न कम्पयति वायसपक्षवातः।
हास्योऽसि भोः! समकरक्षुभितोर्मिमालं
पातुं य इच्छसि कराञ्जलिना समुद्रम् ॥६॥

१ शापः—काले ज्ञास्यसि।
२ राजाः—हं, कथं सहसैव नष्टः। यावदहमपि शयनमुपगम्य नयनव्याक्षेपं करोमि (*स्वपिति*)
३ शापः—अये प्रसुप्तः। अलक्ष्मि! खलति! कालरात्रि! महानिद्रे! पिङ्गलाक्षि! तदागम्यतामभ्यन्तरं प्रविशामः।
४ सर्वाः—एवं होदु [ एवं भवतु ]
५ (*प्रविश्य*)
६ राजश्रीः—न खलु प्रवेष्टव्यम्।

---

प्रवेश करूँगा ॥५॥
१ कंस—तुम असम्भव काम करना चाहते हो।
सुनहले, सुन्दर, ऊँचे शिखर और कुँजों वाले मेरु पर्वत को कौए के पंखों की हवा नहीं हिला सकती। अरे! तू अपने छोटे से हाथ से क्षुभित तथा तरंगित समुद्र को अंजलि से पीना चाहता है। तू कैसी उपहास की बात कर रहा है ॥६॥
१ शाप—मौका आने पर पता लग जाएगा।
२ राजा—हाय, एकदम ही छिप गया। मैं भी कुछ देर तक बिस्तर पर लेट कर आराम कर लेता हूँ। (*सोता है*)
३ शाप—अरे, सो गया यह। अलक्ष्मि! दुष्टे! कालरात्रि! महानिद्रे पिङ्गलाक्षि! तो आओ अन्दर प्रवेश करें।
४ सब—अच्छा।
५ (*प्रवेश करके*)
६ राजश्री—अन्दर मत जाओ।

७ शापः—का भवती ।

८ श्रीः—किं मां न जानीषे । अहं खल्वस्य लक्ष्मीः ।

९ शापः—एवम् । राजश्रीः । अपक्रामतु भवती । इदं खलु मम गृहं संवृत्तम् ।

१० श्रीः—हं,

लङ्कोपमं मम गृहं न विचिन्त्य* मूढ !
कस्याश्रयाद् विशसि मामवधूय रात्रौ ।
किं भाषितेन बहुना न च शक्यमेतद्
द्रष्टुं प्रवेष्टुमिह† तेऽद्य मयाभिजुष्टम् ॥७॥

१ शापः—भगवति पद्मालये ! अपक्रामतु किल कंसशरीरात् । विष्णुराज्ञापयति ।

२ श्रीः—कथं विष्णुराज्ञापयतीति भोः ! कष्टम् ।

न चाहं चिरसंवासात् त्यक्तुं शक्नोमि पार्थिवम् ।
बलवान् गुणसङ्ग्राहो दृढं तपति मामयम् ॥८॥

---

७ शाप—तुम कौन हो ?

८ श्री—क्या तुम मुझे नहीं जानते ? मैं इसकी लक्ष्मी हूँ ।

९ शाप—अच्छा, राजश्री हो । आप यहाँ से हट जाओ, अब यह मेरा घर हो गया है ।

१० श्री—अच्छा,

**अरे मूर्ख, बिना कुछ सोचे रात्रि के समय मेरा तिरस्कार करके लंका के समान मेरे घर में किस के आश्रय से प्रवेश कर रहे हो। बहुत बोलने से क्या ? मेरे द्वारा रक्षित घर में तुम्हें आज यहाँ प्रवेश करना तो दूर रहा, देख भी नहीं सकते ॥७॥**

१ शाप—भगवती लक्ष्मी। विष्णु की आज्ञा है कि कंस के शरीर से निकल जाओ ।

२ श्री—क्या विष्णु की ऐसी आज्ञा है ? हाय !

**मैंने देर से इस राजा के शरीर में वास किया है इसे सहसा छोड़ना कठिन है। गुणों में लगावट बलवान् है। अतः इस समय इस त्याग से मुझे बड़ा संताप है॥८॥**

---

*नशब्दसमास इति गटि.

†इह इत्यस्य स्थाने अपि इति स्याद् इति गटि.

१ भवतु। अनतिक्रमणीया विष्णोराज्ञा। तस्मादहमपि विष्णुसकाशमेव यास्यामि। ( *निष्क्रान्ता* । )

२ शापः—अपक्रान्ता राजश्रीः। हन्तेदानीमिदमस्माकमावासः संवृत्तः। अलक्ष्मि ! खलति ! कालरात्रि ! महानिद्रे ! पिङ्गलाक्षि ! अभ्यन्तरं प्रविश्य स्वजातिसदृशी क्रीडा क्रियताम्।

३ सर्वाः—अज्जप्पहुदि अवणीदधम्मचारित्तो होहि [ अद्यप्रभृत्यपनीतधर्मचारित्रो भव ]

शापः—

**परिष्वजामि गाढं त्वां नित्याधर्मपरायणम्।**
**प्राप्नोमि मुनिशापस्त्वामचिरान्नाशमेष्यसि ॥६॥**

१ ( *अन्तर्हितः* )

२ ( *प्रविश्य* )

३ प्रतिहारी—जेदु भट्टा [ जयतु भर्ता ]

४ राजा—हः !

---

१ अच्छा, विष्णु की आज्ञा का उल्लंघन करना कठिन है तो मैं भी विष्णु के पास जाती हूँ। ( *प्रस्थान* )

२ शाप—राजश्री चली गई, अहा, यह हमारा घर बन गया है। अलक्ष्मि, दुष्टे, कालरात्रि, महानिद्रे, पिंगलाक्षि, अन्दर प्रवेश करो और अपनी जाति के अनुरूप क्रीडा करो।

३ सब—आज से तुम गुणों और चरित्र से शून्य हो जाओ।

शाप—
**मैं पाप के कार्यों में हमेशा निरत रहने वाले आलिगन करता हूँ। मेरा नाम मुनि का शाप है, मैं तुम्हें पकड़ता हूँ। तुम जल्दी ही नाश को प्राप्त हो जाओगे ॥६॥**

१ ( *प्रस्थान* )

२ ( *प्रवेश करके* )

३ प्रतिहारी—भर्ता की जय हो।

४ ाजा—हः, कौन ?

५ प्रतिहारी—भट्टा ! जसोधरा खु अहं [ भर्तः ! यशोधरा खल्वहम् ]

६ राजा—यशोधरे ! किं त्वया मातङ्गीजनप्रवेशो न दृष्टः ।

७ प्रतिहारी—हं मादङ्गिजणत्ति। णिच्चं भट्टिपादमूले वत्तमाणस्स व जणस्स इह प्पवेसो दुल्लहो, किं उण मादङ्गिजणस्स [ हं मातङ्गीजन इति। नित्यं भर्तृपादमूले वर्तमानस्यैव जनस्येह प्रवेशो दुर्लभः, किं पुनर्मातङ्गीजनस्य ]

८ राजा—किं स्वप्नो नु मयानुभूतः। यशोधरे ! गच्छ। बालाकिः काञ्चुकीयः प्रवेश्यताम्।

९ प्रतिहारी—जं भट्टा आणवेदि ( *निष्क्रान्तः* ) [ यद् भर्ताज्ञापयति ]

१० ( *ततः प्रविशति काञ्चुकीयः* )

११ काञ्चुकीयः—जयतु महाराजः।

१२ राजाः—आर्य बालाके ! प्रष्टव्यौ सांवत्सरिकपुरोहितौ—अद्य रात्रौ वातोद्भ्रामभूमिकम्पोल्कापाता दैवतप्रतिमाश्च प्रतिभासिताः किमर्थमिति।

१३ काञ्चुकीयः—महाराज* ! सांवत्सरिकपुरोहितौ विज्ञापयतः।

---

५ प्रतिहारी—महाराज ! मेरा नाम यशोधरा है।

६ राजा—यशोधरे, तुमने क्या चण्डालिनियों को घुसते नहीं देखा ?

७ प्रतिहारी—हैं ! कैसी चण्डालिनियाँ, जो आपके चरणकमल की सेवा करते हैं उन्हीं का प्रवेश दुर्लभ होता है, चण्डालिनियों के प्रवेश का तो कहना ही क्या?

८ राजा—तो क्या मुझे स्वप्न आया है। यशोधरे, जाओ, कंचुकी बालाकि को बुलाओ।

९ प्रतिहारी—जैसे भर्ता की आज्ञा है। ( *प्रस्थान* )

१० ( *कंचुकी का प्रवेश* )

११ कंचुकी—महाराज की जय हो।

१२ राजा—आर्य बालाकि, ज्योतिषी और पुरोहित से पूछो कि आज जो रात को आँधी, भूकम्प, उत्कापात और देवताओं की मूर्तियाँ दिखाई दी हैं उनका क्या फल है ?

१३ कंचुकी—महाराज ! पुरोहित और ज्योतिषी निवेदन करते हैं।

---

†पुत्रोऽभूद् 'इतिस्यात् इति गटि.

१४ राजा—किमिति ।

१५ काञ्चुकीयः—श्रूयताम् ।

भूतं नभस्तलनिवासि नरेन्द्र ! नित्यं
कार्यान्तरेण नरलोकमिह प्रपन्नम् ।
आकाशदुन्दुभिरवैः समहीप्रकम्पै-
स्तस्यैष जन्मनि विशेषकरो विकारः ।।१०।।

राजा—

कस्मिञ्जाते सशैलेन्द्रा कम्पितेयं वसुन्धरा ।
ज्ञायतां कस्य[†] पुत्रोऽयं किं वा जन्मप्रयोजनम् ।।११।।

१ इति ।

२ काञ्चुकीयः—यदाज्ञापयति महाराजः ( *निष्क्रम्य प्रविश्य* ) जयतु महाराजः । प्रसूतवती किल देवकी ।

३ राजा—किं प्रसूतम् ।

४ काञ्चुकीयः—दारिका प्रसूता ।

---

१४ राजा—क्या ?

१५ कंचुकी—सुनिए—

हे राजन्, वह जो हमेशा आकाश मण्डल में निवास करता है वह किसी विशेष उद्देश्य से इस मृत्युलोक में अवतीर्ण हुआ है । उसके जन्म पर आकाश में दुन्दुभि शब्दों से तथा पृथ्वी कम्पन से विशेष विकार हुआ है ।।१०।।

राजा—

किस के उत्पन्न होने पर पर्वतों सहित यह पृथ्वी काँपी है, वह किसका पुत्र है और उसके जन्म का क्या प्रयोजन है ।।११।।

१ यह ।

२ कंचुकी—महाराज की जैसी आज्ञा । ( *जाकर और लौटकर* ) महाराज की जय हो, देवकी के घर बच्चा उत्पन्न हुआ है ।

३ राजा—क्या पैदा हुआ है ?

४ कंचुकी—लड़की उत्पन्न हुई है ।

---

*इतः प्राक् तथा ( निष्क्रम्य पुनः प्रविश्य ) इत्यपेक्षितं भाति इति गटि.

५ राजा—मा तावत्। एतानि महानिमित्तानि दारिकाप्रसूतिमात्रेण उत्पद्यन्ते।

६ काञ्चुकीयः—प्रसीदतु महाराजः। अनृतं नाभिहितपूर्वं मया। भवतो भृत्यवर्गपरिवृतायाः धात्र्या हस्ते दृष्टा सा।

७ राजा—अथवा ब्राह्मणवचनमनृतमपि सत्यं पश्यामि। गच्छ, वसुदेवस्तावदाहूयताम्।

८ काञ्चुकीयः—यदाज्ञापयति महाराजः *( निष्क्रान्तः )*

९ राजा—धर्मशीलः सत्यवादी वसुदेवः। अथ तु मम समीपेऽनृतं न ब्रवीति। भवतु, श्रोष्यामस्तावत्।

१० *( ततः प्रविशति वसुदेवः )*

वसुदेवः—

**षण्णां सुतानां समुपेत्य नाशं**
**वहन्निदं शोककृशं शरीरम्।**
**आहूयमानोऽकरुणेन राज्ञा**
**गच्छाम्यहं भृत्य इवास्वतन्त्रः ॥१२॥**

---

५ राजा—ऐसा नहीं हो सकता ! ऐसे बड़े शकुन लड़की की उत्पत्ति पर सम्भव हैं ?

६ कंचुकी—महाराज प्रसन्न हों। मैंने झूठ कभी नहीं कहा। आपकी दासियों से घिरी हुई दाई के हाथ में उसे मैंने देखा था।

७ राजा—मैं ब्राह्मण के झूठ को सत्य समझता हूँ। जाओ, वसुदेव को जाकर बुला लाओ।

८ कंचुकी—जैसे महाराज की आज्ञा। *( प्रस्थान )*

९ राजा—वसुदेव धर्मशील और सत्यवादी है और वह मुझ से झूठ नहीं बोलेगा। अच्छा, उसकी बात हम सुनेंगे।

१० *( वसुदेव का प्रवेश )*

वसुदेव—

**छः लड़कों के नाश को देखकर शोक से क्षीण इस शरीर को धारण करता हुआ मैं निर्दय राजा से बुलाया गया हूँ और पराधीन नौकर की तरह जा रहा हूँ ॥१२॥**

१ भोः ! एवंविधा लोकवृत्तिः।

**स्मरतापि भयं राजा भयं न स्मरतापि वा ।**
**उभाभ्यामपि गन्तव्यो भयादप्यभयादपि ।।१३।।**

१ ( *उपसृत्य* ) शौरसेनीमातः ! आस्यते ।

२ राजा—यादवीमातः ! आस्यताम् ।

३ वसुदेवः—बाढम् । ( *उपविश्य* ) शौरसेनीमातः ! किमर्थं वयमाहूताः ।

४ राजा—यादवीमातः ! प्रसूतवती किल देवकी ।

५ वसुदेवः—अथ किम् , प्रसूतवती ।

६ राजा—किं प्रसूतम् ?

७ वसुदेवः—( *आत्मगतम्* ) मयापि नामानृतं वक्तव्यं भविष्यति । अथवा कुमाररक्षणार्थमनृतमपि सत्यं पश्यामि । किमिदानीं करिष्ये । भवतु दृष्टम् ( *प्रकाशम्* ) दारिका प्रसूता तया ।

राजा—

**दारिका वा कुमारो वा हन्तव्यः सर्वथा मया ।**
**दैवं पुरुषकारेण वञ्चयिष्याम्यहं ध्रुवम् ।।१४।।**

---

१ संसार की ऐसी हालत है ।

**चाहे कोई व्यक्ति राजा से डरता है अथवा नहीं डरता दोनों हालतों में भय और अभय से राजा के पास जाना पड़ता है ।।१३।।**

१ ( *पास जाकर* ) शौरसेनीपुत्र ! मैं उपस्थित हूँ ।

२ राजा—यादवीपुत्र, बैठ जाओ ।

३ वसुदेव— अच्छा जी । ( *बैठकर* ) शौरसेनीपुत्र ! मुझे कैसे बुलाया है ।

४ राजा— यादवीपुत्र, देवकी के घर प्रसव हुआ है ।

५ वसुदेव—हाँ, प्रसव हुआ है ।

६ राजा—किसका जन्म हुआ है ?

७ वसुदेव—( *मन में* ) अरे मुझे भी झूठ बोलना होगा । अथवा कुमार की रक्षार्थ झूठ को भी सत्य समझता हूँ । । अब क्या करूँ ? अच्छा, सूझ गया । ( *प्रकट* ) उसने लड़की को जन्म दिया है ।

राजा—

**वह लड़की हो अथवा लड़का, मुझे उसकी हत्या करनी ही होगी । मैं अपने पौरुष से देव की वंचना करूँगा ।।१४।।**

१ ( *प्रविश्य* )

२ प्रतिहारी—जेदु भट्टा। अम्हाअं भट्टिणी विण्णवेदि-दारिअत्ति बाळेत्ति अ करीअदु किळ महाराएण अणुक्कोसो [ जयतु भर्ता। अस्माकं भट्टिनी विज्ञापयतिदारिकेति बालेति च क्रियतां किल महाराजेनानुक्रोशः। ]

३ वसुदेवः—शौरसेनीमातः! क्रियतां तपस्विन्या देवक्या वाक्यम्। दारिकासु स्त्रीणामधिकतरः स्नेहो भवति।

४ राजा—किं भवान् स्मरति समयम्।

**मधूकस्य ऋषेः शापं श्रुत्वा मे समयस्तदा।**
**देवक्या धारितान् गर्भान् दास्यामीति त्वया* कृतः ॥१५॥**

१ वसुदेवः—समय इति। एष न व्याहरामि।

२ प्रतिहारी—भट्टा किं त्ति अम्हाअं भट्टिणीए णिवेदिदव्वं [ भर्तः किमित्यस्माकं भट्टिन्यै निवेदयितव्यम् ]

३ राजा—यशोधरे! उच्यतां देवक्याः—न युक्तमिदानीं निबन्धमभिधातुम्। अन्यत् प्रियतरं करिष्यामीति।

---

१ ( *प्रतिहारी का प्रवेश* )

२ प्रतिहारी—भर्ता की जय हो। हमारी भट्टिनी प्रार्थना करती है—इस बार लड़की ने जन्म लिया है इसलिए महाराज दया करें।

३ वसुदेव—शौरसेनीपुत्र, तपस्विनी देवकी की प्रार्थना स्वीकार कर लो। लड़कियों में स्त्रियों का ग्रधिक स्नेह होता है।

४ राजा—क्या ग्रापको प्रतिज्ञा स्मरण है?

**तुमने मधूक ऋषि का शाप सुनकर प्रतिज्ञा की थी कि देवकी के गर्भ से जो होगा मैं उसे तुम्हें अर्पित कर दूंगा, ऐसी तेरी प्रतिज्ञा थी ॥१५॥**

१ वसुदेव—प्रतिज्ञा तो की थी। मुझे ग्रब कुछ नहीं कहना।

२ प्रतिहारी—भर्ता, मुझे भट्टिनी देवकी को क्या निवेदन करना है।

३ राजा—यशोधरे, देवकी से कहो कि इस समय प्रार्थना करना ठीक नहीं है। किसी दूसरे समय तुम्हारा बड़ा मनोरथ पूरा कर दूंगा।

---

*य ( या ? था )

४ **प्रतिहारी**--जं भट्टा आणवेदि [ यद् भर्ताज्ञापयति ]

५ **राजा**--यशोधरे ! एवं क्रियताम् ।

६ **प्रतिहारी**--सुहं पविसदु किळ भट्टा [ सुखं प्रविशतु किल भर्ता ]

७ **वसुदेवः**--विविक्तमिच्छता मयापि नाम परापत्यं निधनमुपनेतव्यं भवति । किन्नु खलु कुमारमेवानीय प्रयच्छामि । अथवा,

**दारिकेयं मृता पूर्वं पुनरेव समुत्थिता ।**
**अस्य बालस्य माहात्म्यान्नैषा वधमवाप्स्यति ॥१६॥**

१ यावदहमपि देवकीं समाश्वासयामि । ( *निष्क्रान्तः* )

२ **राजा**--यशोधरे ! प्रवेश्यतां सा दारिका ।

३ **प्रतिहारी**--जं भट्टा आणवेदि । [ यथा भर्ता आज्ञापयति ] (*निष्क्रान्ता*)

४ ( *ततः प्रविशति दारिकां गृहीत्वा धात्री रक्षिपुरुषाश्च* )

५ **सर्वे**--सणिअं सणिअं अय्या । इदं मज्झमदुवाळं । पविसदु अय्या । [ शनैः शनैरार्या । इदं मध्यमद्वारम् । प्रविशत्वार्या ]

६ **धात्री**--( *प्रविश्य* ) जेदु भट्टा । इअं दारिआ अम्हेहि चिरप्पहुदि

---

४ **प्रतिहारी**—जैसे भर्ता आज्ञा देते हैं ।

५ **राजा**—यशोधरे ! ऐसा करो ।

६ **प्रतिहारी**—भर्ता सुख से प्रवेश करें ।

७ **वसुदेव**—मेरा चित्त अभी तक साफ था । मैं क्या किसी दूसरे की सन्तान की हत्या करवा दूं । अथवा कुमार को यहीं ला दूं अथवा,

**यह बालिका पहले मर गई थी और बाद में जी पड़ी थी । उस बालक के प्रभाव से इसकी कभी मृत्यु न होगी ॥१६॥**

१ मैं भी जाकर देवकी को आश्वासन देता हूँ । ( *प्रस्थान* )

२ **राजा**—यशोधरे, उस बालिका को अन्दर ले आओ ।

३ **प्रतिहारी**—जैसे भर्ता आज्ञा देते हैं । ( *प्रस्थान* )

४ ( *बालिका को उठाये हुए धात्री का रक्षि-पुरुषों के साथ प्रवेश ।* )

५ **सब**—आर्ये, शनैः शनैः चलो । यह बीच का दरवाजा है । आर्या प्रवेश करें ।

६ **धात्री**—( *प्रवेश करके* ) भर्ता की जय हो । मैंने इस बालिका को अभी

रक्खिदा [ जयतु भर्ता । इयं दारिकास्माभिश्चिरात् प्रभृति रक्षिता ]

७ राजा—अहो राजदर्शनीयेयं दारिका । मयापि नाम स्त्रीवधः कर्तव्यो भवति ।

८ धात्री—सणिअं सणिअं भट्टा ! [ शनैः शनैः भर्तः ! ]

९ राजा—इयं कंसशिला । यावत् साहसमनुष्ठास्यामि ।

**अयं हि सप्तमो गर्भ ऋषिशापबलोत्थितः ।**
**अस्मिन् नाशं गते गर्भे मम शान्तिर्भविष्यति ।।१७।।**

१ ( *गृहीत्वा प्रहृत्य* ) अये,

**एकांशः* पतितो भूमावेकांशो दिवमुन्नतः ।**
**मां निहन्तुमिहोद्भूतः करैः शस्त्रसमुज्ज्वलैः ।।१८।।**

१ अये इयमिदानीं

**तीक्ष्णाग्रं शूलमालम्ब्य रौद्रवेषेण जृम्भते ।**
**विनाशकाले सम्प्राप्ते कालरात्रिरिवोत्थिता ।।१९।।**

---

तक देखभाल की है ।

७ राजा—ओह ! यह बालिका तो राजाओं के देखने योग्य है । मैं भी स्त्री जाति की हत्या करूँगा ?

८ धात्री—भर्ता शनैः शनैः ।

९ राजा—यह कंसशिला है । अच्छा तो मैं साहस करता हूँ ।

**ऋषि के शाप के बल से पैदा हुआ यह सातवां गर्भ है । इस गर्भ के नाश होने पर मुझे शांति प्राप्त हो जायगी ।।१७।।**

१ ( *पकड़ कर, प्रहार करके* ) अरे,

**इसका एक हिस्सा भूमि पर पड़ गया है और दूसरा आकाश की तरफ उड़ गया है । शस्त्रों से चमकते हुए हाथों से यह मुझे मारने के लिये पैदा हुई है ।।१८।।**

१ अरे यह तो अब

**तेज शूल को धारण करके भयानक वेष से हुँकार कर रही है और प्रलयकाल के आने पर कालरात्रि की तरह यह पैदा हुई है ।।१९।।**

---

*एकांशपतितो इति पाभे.

*( ततः प्रविशति कात्यायनी सपरिवारा । )*

कात्यायनी—

*सुम्भं निसुम्भं महिषं च हत्वा
कृत्वा सुरांस्तान्† हतशत्रुपक्षान् ।
अहं प्रसूता वसुदेववंशे
कात्यायनी कंसकुलक्षयाय ॥२०॥

कुण्डोदरः—

कुण्डोदरोऽहमजितो रणचण्डकर्मा
देव्याः प्रसूतिर्जनितोग्रमहानिनादः ।
शीघ्रं प्रयामि गगनादवनीं विशालां
दृप्तांञ् जिघांसुरसुरानतिवीर्यदर्पान् ॥२१॥

शूलः—

शूलोऽस्मि भूतमिह भूमितले प्रपन्नो
देव्याः प्रसादजनितोज्ज्वलचारुवेषः ।

---

*( कात्यायनी का परिवार के साथ प्रवेश । )*

कात्यायनी —

सुम्भ, निसुम्भ और महिषासुर को मार कर और देवताओं के शत्रुओं का वध करके, मैं कात्यायनी, वसुदेव के वंश में कंसकुल के नाश के लिए पैदा हुई हूँ ॥२०॥

कुण्डोदर—

मैं कुण्डोदर नामक सांप, लड़ाई में भयंकर काम करने वाला और अजेय हूँ। देवी की इच्छा पर भयानक नाद करता हूँ, बल के दर्प से अहंकारी असुरों को मारने की इच्छा से इस विशाल भूमि पर आकाश से शीघ्र आ रहा हूँ ॥२१॥

शूल—

देवी के प्रसाद से मुझे उज्ज्वल और सुन्दर वेष प्राप्त हुआ है और मैं इस पृथ्वी लोक पर शूल अवतीर्ण हुआ हूँ। जैसे कीर्त्तिकेय ने समुद्र में सुदृढ़

---

*देवेभ्यः शुन्धस्वेति देवेभ्यः शुम्भस्वेति मैसं ३, ८, ५-६ काठसं २५,६ तैसं ६,२,७,८.
†सुरा ( र्यां ? ना ) हतशत्रुपच्चान् इति पामे.

कंसं निहत्य समरे परिकर्षयामि
तं पादपं जलनिधेरिव कार्त्तिकेयः ॥२२॥

नीलः

अहं हि नीलः कलहस्य कर्ता
सङ्ग्रामशूरो न पराङ्मुखश्च ।
निहन्मि कंसं युधि दुर्विनीतं
क्रौञ्चं यथा शक्तिधरः प्रकृष्टः ॥२३॥

मनोजवः--

मनोजवो मारुततुल्यवेगो
देव्यास्तु कार्यार्थमिहोपयातः ।
करोमि सङ्ग्रामशिरःसु दैत्यान्
वह्निर्नलानां निलयं यथैव ॥२४॥

१ कात्यायनी--कुण्डोदर ! शङ्कुकर्ण ! महानील ! मनोजव ! तदागम्यताम् । भगवतो विष्णोर्बालचरितमनुभवितुं गोपालकवेषप्रच्छन्ना घोषमेवावतरिष्यामः ।

---

तारक का नाश किया था वैसे ही मैं भी युद्ध में कंस को मारकर घसीटूँगा ॥२२॥

नील—

मैं कलह को खड़ा करने वाला संग्राम में शूर और कभी पीठ न दिखाने वाला नील हूँ। मैं दुर्विनीत कंस को उसी तरह मारूँगा जिस तरह शक्तिधर कार्त्तिकेय ने क्रौंच पर्वत को फाड़ दिया था ॥२३॥

मनोजव—

मैं वायु के समान वेग वाला मनोजव हूँ और देवी की कार्यसिद्धि के लिए यहाँ आया हूँ। जैसे अग्नि नड़ों के समूह को जला देती है, उसी प्रकार लड़ाई के मैदान में दैत्यों का नाश करूँगा ॥२४॥

१ कात्यायनी—कुण्डोदर, शंकुकर्ण, महानील, मनोजव, इधर आओ। भगवान् विष्णु की बाललीलाओं को देखने के लिए ग्वालों के वेष में इसी गोपबस्ती में उतर आओ।

२ सर्वे--यदाज्ञापयति भगवती ।

३ *( निष्क्रान्ता सपरिवारा कात्यायनी )*

४ राजा—अये प्रभाता रजनी

**अतः प्रविश्य शान्त्यर्थं शान्तिकर्मोचितं गृहम् ।**
**करोमि विपुलां शान्तिं मम शान्तिर्भविष्यति ।।२५।।**

१ *( निष्क्रान्ताः सर्वे )*

**द्वितीयोऽङ्कः ।**

---

२ सब—जैसे भगवती आज्ञा देती हैं ।

३ *( कात्यायनी का परिवार के साथ प्रस्थान )*

४ राजा—अरे सुबह हो गया ।

**मैं शांति प्राप्ति के लिए शांतिकर्मोचित भवन में प्रवेश करता हूँ । और खूब शांति पाठ करता हूँ जिससे मुझे शांति प्राप्त होगी ।।२५।।**

१ *( सब निकल जाते हैं )*

**द्वितीय अंक समाप्त**

# अथ तृतीयोऽङ्कः ।

१ *( ततः प्रविशति वृद्धगोपालकः । )*

२ वृद्धगोपालकः--भो मेघदिण्ण ! क्खु, वषभदिण्ण ! क्खु, कुम्भदिण्ण ! क्खु, घोषदिण्ण ! क्खु पकाळेथ पकाळेथ गोधणं । एदेषिंष वुन्दावणे पकामं पाणीअं पादूणं हुम्भारवं करन्तो आअन्तु गोधणं । एषो गोवज्जहादो* णिक्कमिअ परिघट्टिअवम्मीअमूलो भुजङ्गेहि कुवण्णेहिं णीप्लुपव्वादामेहि षिंगळग्गेहि विअ वषभो षोभदि । अण्णो वि एषो वषभो उषिदप्पषारिअपुच्छो णिकुञ्चिअजाणू षषीव धवळङ्गो अग्गविषाणेहि महीं उव्वहन्तो विअ षोभदि । जाव दाणि दामअं पद्दावआमि । अळे दामअ ! भअवदीणं पुथळे ओदाळिअ षहवच्छाणं तुवं पि आअच्छ । [ भो मेघदत्त ! खलु, वृषभदत्त ! खलु, कुम्भदत्त ! खलु, घोषदत्त ! खलु, प्रकालयत प्रकालयत गोधनम् । एतस्मिन् वृन्दावने प्रकामं पानीयं पीत्वा हुम्भारवं कुर्वदायातु गोधनम् । एष गोव्रजान् (?) निष्क्रम्य परिघट्टितवल्मीकमूलो भुजङ्गैः कुवर्णैः नीलोत्पलदामभिः शृङ्गलग्नैरिव वृषभः शोभते । अन्योऽप्येष वृषभ उच्छ्रितप्रसारितपुच्छो निकुञ्चितजानुः शशीव धवलाङ्गोऽग्रविषाणाभ्यां महीमुद्वहन्निव शोभते । यावदिदानीं दामकं शब्दयामि । अरे दामक ! भगवतीः सुस्थलेऽवतार्य सहवत्सास्त्वमप्यागच्छ ]

---

## तृतीय अंक

१ *(वृद्धगोपाल का प्रवेश)*

२ वृद्धगोपालक—अरे मेघदत्त, वृषभदत्त, कुम्भदत्त और घोषदत्त इन गौओं को पेट भर कर खाने दो । इस वृन्दावन में इन्हें पानी पीने दो और रम्भाती हुई इन्हें आने दो । इन गौओं में से आगे बढ़ रहा और सींगों से वल्मीकमूल को खदेरता हुआ यह वृषभ आ रहा है । इसके सींगों में भयंकर वर्ण के साँपों जैसी नीलोत्पल की मालाएं लगी हुई हैं । और भी यह वृषभ पूंछ को फैलाता हुआ और जंघाओं को सिकोड़ता हुआ चन्द्रमा की तरह गौरवर्ण सींगों के अगले भागों से पृथ्वी को खदेरता हुआ शोभायमान हो रहा है, अच्छा, तो मैं दामक को बुलाता हूँ । ओ दामक, बछड़ों सहित भगवती गौओं को सूखे रास्ते से यहां लाओ ।

---

* (जोवगाइजूवादो ?) गोवपइजूइादो (गोवृषभयथ.त् इति च्छाया) इति पाभे·

३ *(ततः प्रविशति दामकः)*

४ दामकः—अहो महन्तं तिणजालं षामिणो णन्दगोवष्ष। पुदजणणदिणादो आळहिअ अहिअदळं आणन्दुब्भुदं वड्ढइ। भोदु, इह चिट्ठदु गोधणं, जाव मादुळं उवषप्पिष्षं। (उपसृत्य) मादुळ! वन्दामि। [अहो महत् तृणजालं स्वामिनो नन्दगोपस्य। सुतजननदिनादारभ्याधिकतरमानन्दाद्भुतं वर्धते। भवतु, इह तिष्ठतु गोधनं, यावन्मातुलमुपसप्स्यामि। मातुल! वन्दे।]

५ वृद्धगोपालकः—षन्ती होदु षन्ती होदु अम्हाणं गोधणष्ष अ। [शान्तिर्भवतु शान्तिर्भवत्वस्माकं गोधनस्य च।]

६ दामकः—मादुळ! जमप्पहुदि नन्दगोवपुत्ते पषूदे, तदप्पहुदि अम्हाणं गोधणं वज्जिअरोअं षंवुत्तं। ण (णं ?) षव्वाणं गोवजणाणं पीदी वड्ढइ। अण्णं च, खादे खादे मूळाणि, फळाणि गुम्हे गुम्हे। मधु केत्तिअं दुघ्घदि क्खीरं तत्तअं एव्व घिदं। [मातुल! यदाप्रभृति नन्दगोपपुत्रः प्रसूतः, तदाप्रभृत्यस्माकं गोधनं वर्जितरोगं संवृत्तम्। ननु सर्वेषां गोपजनानां प्रीतिर्वधते, अन्यच्च, खाते खाते मूलानि, फलानि गुल्मे गुल्मे। मधु कियद् दुह्यते क्षीरं तावद् एव घृतम्।]

७ वृद्धगोपालकः—अण्णं च इदं अच्छळिअं। दषरत्तप्पषूदे णन्दगोववुत्ते पूतणा णाम दाणवी विषषम्पूरिदत्थणा णन्दगोवीए रूवं गह्निअ आ-

---

३ *( दामक का प्रवेश )*

४ **दामक**—अरे, स्वामी नन्दगोप के यहाँ पर्याप्त घास है। जिस दिन से इसके यहाँ पुत्र पैदा हुआ है तब से यह आनन्द के मारे फूल रहा है। अच्छा, गौएँ यहाँ ठहरें मैं मामा के पास जाता हूँ। मामा जी, नमस्कार।

५ **वृद्धगोपालक**—हमें और हमारे गोधन की शांति हो।

६ **दामक**—मामा जी, जब से नन्दगोप के यहाँ लड़का पैदा हुआ है तब से हमारे पशुओं में नीरोगता हो गई है। सब ग्वालों में खुशी छा रही है। खाई खाई में मूल लग गए हैं, गुल्म गुल्म में फल लग रहे हैं, कितना मधु है। दूध को दोहते ही ऊपर घी आ जाता है।

७ **वृद्धगोपालक**—यह भी आश्चर्यजनक है। जब कुमार दस दिन का हुआ तो विष से पूरित स्तन वाली पूतना नाम राक्षसी नन्दगोपी का रूप धारण

अदा। तदो ताए दाळअं गह्निअ तष्प मुहे त्थणं पक्खित्तं। तदो तं विजाणिअ पुविदा पाडिदा चम्मवषेपा दाणवी भविअ तत्तो एव्व मुदा। तदो मापमत्ते णन्दगोववुत्ते षअडो णाम दाणवो षअडवेषं गह्निअ आअदो। तं पि जाणिअ एकपादप्पहारेण चुण्णीकिदो षो वि दाणवो भविअ तत्तो एव्व मुदो। तदो मापपरिवुत्ते नन्दगोववुत्ते एकष्पिं गेहे गच्छिअ खीरं पिबइ, अण्णष्पिं गेहे गच्छिअ दधिं भक्खइ, एवष्पिं गेहे गच्छिअ णवणीदं गिळदि, अण्णष्पिं गेहे गच्छिअ पाअसं भुञ्जइ, अपरष्पिं गेहे गच्छिअ तक्कघटं पळोअदि। तदो ळट्टाहि गोवजुवदीहि णन्दगोवीए उत्तं। तदो ळुट्ठाए णन्दगोवीए दामं गह्निअ तष्प मज्झे बन्धिअ षेषं उळूहळे बज्झं। तदो तं पि उळूहळं आघट्टअन्तं पेक्खिअ जमळज्जुणे णाम दाणवे णिक्खित्ते। तदो दुवे एक्कीभूदे। तेषं अन्तळेण गच्छन्तेण णन्दगोववुत्तेण आघट्ट-अन्तेण षमूळविडवं चुण्णीकिदे ते वि दाणवे भविअ तत्तो एव्व मुदे। तदो गोवजणेहि उत्तंमहाबळपळक्कमो अज्जप्पहुदि भट्टिदामोदळो णाम होदु त्ति। तदो आहावणप्पहावणमत्ते णन्दगोववुत्ते पळम्बो णाम दाणवो णन्दगोववेसं गह्निअ आअदो। तदो षङ्कळिषणं कण्ठे णिक्खिविअ

---

करके आई। इसके बाद उसने बच्चे को लेकर उसके मुख में स्तन दिया। वह उसे जानकर सो गई। तदनन्तर भूमि पर गिर पड़ी और वह राक्षसी मर गई। जब नन्दगोप का कुमार एक मास का हुआ तो शकट नाम का राक्षस शकट वेष धारण करके आया। उसे भी एक पैर की चोट से पूर्ण कर दिया और वह मर गया। जब वह एक मास से बड़ा हुआ तो एक के घर में जाकर दूध पीता है दूसरे घर में जाकर दही खा जाता है और किसी के घर में मक्खन निगल जाता है। किसी के घर में दूध की मिठाइयाँ खाता है। किसी के घर में लस्सी के घड़े को देखता है, ग्वालनों ने गुस्से होकर नन्दगोपी को सब कुछ कह दिया। तब किसी नन्दगोपी ने आधी रस्सी से बांध कर और शेष आधी से कुमार को उलूखल के साथ बांध दिया। उसने उलूखल को उठा कर यमल और अर्जुन नाम के दो दानवों पर फैंक दिया। दोनों एक साथ जुड़ गए। उनके पास जाते हुए पेड़ की जड़ में छिपे हुए राक्षसों को वहाँ ही समाप्त किया। तब ग्वालों ने कहा, महाबली और पराक्रम वाला यह कुमार है आज से उसका नाम भर्तृ दामोदर रखा जाएगा। जब कुमार कूदने में चतुर हुआ तो प्रलम्ब नाम का दानव नन्दगोप का वेष बनाकर वहाँ

गच्छन्तं तं विजाणिअ भट्टिणा पङ्कलिपणेण तष्ष दाणवष्प षीपे मुट्ठिप्पहारो किदो। तेण प्पहारेण उक्खित्तचक्खू षो वि दाणवो भविअ तत्तो एव्व मुदो गोवजणेहि परिवुदो ताळहळणि गह्विदुं ताळवणं गदो। तहिं ताळवणे धेणुओ णाम दाणवो गद्दभवेसं गह्निअ आअदो। तदो तं पि जाणिअ भट्टिदामोदळेण तष्ष वामपादं गह्निअ उक्खिविअ पादिदाणि ताळफळाणि। षो वि दाणवो भविअ तत्तो एव्व मुदो। तदो केसी णाम दाणवो तुळङ्गवेसं गह्निअ आअदो। तदो तं पि जाणिअ भट्टिदामोदळेण तष्ष मुहे कोप्परो दिण्णो। तदो तेण दुवी (?) पाडिदो तुळङ्गो। षो वि दाणवो भविअ तत्तो एव मुदो। एदाणि अण्णाणि (अ) कम्माणि किदाणि भट्टिदामोदळेण। [अन्यच्चेदमाश्चर्यम्। दशरात्रप्रसूते नन्दगोपपुत्रे पूतना नाम दानवी विषसम्पूरितस्तना नन्दगोप्या रूपं गृहीत्वागता। ततस्तया दारकं गृहीत्वा तस्य मुखे स्तनः प्रक्षिप्तः। ततस्तां विज्ञाय सुप्ता पातिता सापि दानवी भूत्वा तत एव मृता। ततो मासमात्रे नन्दगोपपुत्रे शकटो नाम दानवः शकटवेषं गृहीत्वागतः। तमपि ज्ञात्वैकपादप्रहारेण चूर्णीकृतः सोऽपि दानवो भूत्वा तत एव मृतः। ततो मासपरिवृत्तो नन्दगोपपुत्र एकस्मिन् गेहे गत्वा क्षीरं पिबति, अन्यस्मिन् गेहे गत्वा दधि भक्षयति, एकस्मिन् गेहे गत्वा नवनीतं गिरति, अन्यस्मिन् गेहे गत्वा पायसं भुङ्क्ते अपरस्मिन् गेहे गत्वा तक्रघटं प्रलोकते। ततो रुष्टाभिर्गोपयुवतिभिर्नन्दगोप्यै उक्तम्। ततो रुष्टया नन्दगोप्या दाम गृहीत्वा तस्य मध्ये बद्ध्वा शेषमलूखले बद्धम्। ततस्तदप्युलूखलमाघट्टयत् प्रेक्ष्य यमलार्जुनयोर्नाम दानवयोर्मिक्षिप्तम्। ततो द्वावेकीभूतौ। तयोरन्तरेण गच्छता नन्दगोपपुत्रेणाघट्टयता समूलविटपं चूर्णीकृतौ तावपि दानवौ भूत्वा तत एव मृतौ। ततो गोपजनैरुक्तं—महाबलपराक्रमोऽद्यप्रभृति भर्तृदामोदरो नाम भवतु इति। तत आधावनप्रधावनमात्रे नन्दगोपपुत्रे

---

पहुँचा। तब संकर्षण को कण्ठ से फेंक दिया। उसे जाते हुए जानकर भर्ता संकर्षण ने उस राक्षस के सिर पर एक घूंसा दिया, उस चोट से उसकी आंख बाहिर निकल आई और वह दानव वहाँ ही मर गया। ग्वालों के साथ घिरा हुआ ताल फलों के लेने के लिए तालवन को गया। वहाँ तालवन में घेनुक नाम के दानव को गर्दभवेष में देखकर पकड़ लिया। तब उसे भी जानकर भर्ता दामोदर ने बाएं पैर से पकड़ कर उसे भूमि पर दे पटका। तालफल सारे गिर गए। वह भी दानव हो कर गिर पड़ा और मर गया। इसके बाद घोड़े का वेष धारण करके केशी नाम राक्षस आया। उसे भी जानकर भर्ता

प्रलम्बो नाम दानवो नन्दगोपवेषं गृहीत्वागतः । ततः संकर्षणं कण्ठे निक्षिप्य गच्छन्तं तं विज्ञाय भर्त्रा संकर्षणेन तस्य दानवस्य शीर्षे मुष्टिप्रहारः कृतः । तेन प्रहारेणोत्क्षिप्तचक्षुः सोऽपि दानवो भूत्वा तत एव मृतः । गोपजनैः परिवृतस्तालफलानि ग्रहीतुं तालवनं गतः । तत्र तालवने धेनुको नाम दानवो गर्दभवेषं गृहीत्वागतः । ततस्तमपि ज्ञात्वा भर्तृदामोदरेण तस्य वामपादं गृहीत्वोत्क्षिप्य पातितानि तालफलानि । सोऽपि दानवो भूत्वा तत एव मृतः । ततः केशी नाम दानवः तुरङ्गवेषं गृहीत्वागतः । ततस्तमपि ज्ञात्वा भर्तृदामोदरेण तस्य मुखे कूर्परो दत्तः । ततस्तेन द्विधा पाटितस्तुरङ्गः । सोऽपि दानवो भूत्वा तत एव मृतः । एतान्यन्यानि ( च ) कर्माणि कृतानि भर्तृदामोदरेण । ]

८ दामकः—मादुळ ! षव्वं दाव चिट्ठदु । अज्ज भट्टिदामोदळो इमष्षिं वुन्दावणे गोवकण्णआहि षह हळ्ळीषअं णाम पकीळिदुं आअच्छदि । [ मातुल ! सर्वं तावत् तिष्ठतु । अद्य भर्तृदामोदरोऽस्मिन् वृन्दावने गोपकन्यकाभिः सह हल्लीसकं नाम प्रक्रीडितुमागच्छति । ]

९ वृद्धगोपालकः—तेण हि षव्वेहि गोवजणेहि षह भट्टिदामोदळष्ष हळ्ळीषअं पेक्खम्ह । [ तेन हि सर्वैर्गोपजनैः सह भर्तृदामोदरस्य हल्लीसकं पश्यामः । ]

१० दामकः—जं मादुळो आणवेदि । [ यन् मातुल आज्ञापयति । ]

११ ( निष्क्रान्तौ )

---

दामोदर ने उसके मुँह में थूका और वह घोड़ा दो टुकड़े होकर भूमि पर गिरा । वह भी अन्त में राक्षस होकर मर गया । इसी तरह भर्ता दामोदर ने और भी कई लीलाएं की ।

८ दामक—मामा जी, भला यह सब होने दो । आज भर्ता दामोदर इस वृन्दावन में ग्वालों की कन्याओं के साथ हल्लीसक नामक नृत्य करेगा ।

९ वृद्धगोपालक—सब गोपालों के साथ भर्ता दामोदर का हल्लीसक नामक नृत्य देखेंगे ।

१० दामक—जैसे मामा जी आज्ञा देते हैं ।

११ ( प्रस्थान )

## प्रवेशकः ।

( प्रविश्य )

१२

वृद्धगोपालकः—

अणुदिअमत्ते षुय्ये पणमह षव्वादळेण षीषेण ।
णिच्चं जगमादूणं गोणाणं अमिदपुण्णाणं ।। १ ।।

१ अहो अम्हाणं पक्कणाणं षमिद्धी । आडोवषज्जाओ पडहरूववेसाओ वाहळिदुं गच्छामो । अम्हाअं गोवकण्णआओ । घोषपुन्दळि ! वण-माळे ! चन्दळेहे ! मिअक्खि ! आअच्छह आअच्छह षिग्घं ।

[ अनुदितमात्रे सूर्ये प्रणमत सर्वादरेण शीर्षेण ।
नित्यं जगन्मातॄणां गवाममृतपूर्णानाम् ।। १ ।।

अहो अस्माकं पक्कणानां समृद्धिः । आटोपसज्जाः पटहरूपवेषा व्याहर्तुं गच्छामः । अस्माकं गोपकन्यकाः ! घोषसुन्दरि ! वनमाले ! चन्द्ररेखे ! मृगाक्षि ! आगच्छतागच्छत शीघ्रम् ! । ]

( ततः प्रविशन्ति सर्वाः । )

२

३ सर्वाः—मादुळ ! वन्दामो । [ मातुल ! वन्दामहे । ]

४ वृद्धगोपालकः—दाळिआ ! एषो भट्टा दामोदळो गोक्खीरपाण्डुरेण

---

प्रवेशक

( प्रवेश करके )

१

वृद्धगोपालक—
सूर्योदय से पूर्व आदर के साथ सिर झुकाकर अमृत से पूर्ण जगत् की माता गौओं को नित्य नमस्कार करो ।।१।।

१ हमारी बस्तियाँ कितनी सम्पन्न हैं । सज धज कर यह पटह रूपी वस्त्रों को धारण करके सैर के लिए बाहर जाएँगे । अरी गोपकुमारियो, घोष सुन्दरी वनमाला, चन्द्ररेखा तथा मृगाक्षी, तुम जल्दी-जल्दी आओ ।

( सबका प्रवेश )

२

३ सब —मामा, नमस्कार ।

४ वृद्धगोपालक—बेटिओ ! यह भर्ता दामोदर, दूध की तरह शुभ्रवर्ण भर्ता

भट्टिणा षङ्कळिषणेण षह गोवाळएहि अ परिवुदो गुहाणिक्खित्तो षिंहो विअ इदो एव्व आअच्छदि । [ दारिकाः ! एष भर्ता दामोदरो गोक्षीर-पाण्डुरेण भर्त्रा सङ्कर्षणेन सह गोपालकैश्च परिवृतो गुहानिक्षिप्तः सिंह इवेत एवागच्छति । ]

५ *( ततः प्रविशति गोपजनपरिवृतो दामोदरः सङ्कर्षणश्च । )*

६ दामोदरः—*( सविस्मयम् )* अहो प्रकृत्या रमणीयानां गोपकन्यकानां वेषग्रहणविशेषः ।

**एताः प्रफुल्लकमलोत्पलवक्त्रनेत्रा**
**गोपाङ्गनाः कनकचम्पकपुष्पगौराः ।**
**नानाविरागवसना मधुरप्रलापाः**
**क्रीडन्ति वन्यकुसुमाकुलकेशहस्ताः ॥ २ ॥**

१ सङ्कर्षणः—एते गोपदारकाः समागताः ।

**रक्तैर्वेसुकडिण्डिमैः प्रमुदिताः केचिन्नदन्तः स्थिताः**
**केचित् पङ्कजपत्रनेत्रवदनाः क्रीडन्ति नानाविधम् ।**

---

संकर्षण के साथ और ग्वालों से घिरा हुआ गुफा से निकले हुए शेर की तरह इधर ही आ रहा है ।

५ *( ग्वालों से परिवृत दामोदर तथा संकर्षण का प्रवेश )*

६ दामोदर—*( आश्चर्य के साथ )* अरे ये भीरों की कुमारियाँ स्वभाव से ही सुन्दरियाँ हैं । वेषभूषा से ये और भी सुहावनी लग रही हैं ।

**इनके चेहरे प्रफुल्ल कमल की तरह और नेत्र उत्पल की भांति सुन्दर हैं । कनक और चम्पक पुष्प की तरह ये गोपियां गोरी हैं । नाना रंग के वस्त्रों से विभूषित हैं और मधुर बोलती हैं । बन के कुसुमों की तरह आकुल केशों को हाथ में पकड़े हुए खेल रही हैं ॥२॥**

१ संकर्षण—सब नवयुवक ग्वाले यहाँ पधारे हैं ।

**कुछ रंगीन नगाड़ों के साथ अत्यन्त खुश होकर नाच रहे हैं । कुछ कमलपत्र की तरह विशाल नेत्र और मुख वाले नाना प्रकार के खेल खेल रहे हैं ।**

**घोषे जागरिमा* (?) गुरुप्रमुदिता हुम्भारशब्दाकुले**
**वृन्दारण्यगते समप्रमुदिता गायन्ति केचित् स्थिताः ॥३॥**

१ वृद्धगोपालकः—आम भट्टा ! षव्वा षण्णद्धा आअदा । [ आम भर्तः ! सर्वे सन्नद्धा आगताः । ]

२ दामकः—जेदु भट्टा । [ जयतु भर्ता । ]

३ सङ्कर्षणः—दामक ! सर्वे गोपदारकाः समागताः ।

४ दामकः—आम भट्टा । षव्वे षण्णद्धा आअदा । [ आम भर्तः ! सर्वे सन्नद्धा आगताः । ]

५ दामोदरः—घोषसुन्दरि ! वनमाले ! चन्द्ररेखे ! मृगाक्षि ! घोषवासस्यानुरूपोऽयं हल्लीसकनृत्तबन्ध उपयुज्यताम् ।

६ सर्वाः—जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ]

७ सङ्कर्षणः—दामक ! मेघनाद ! वाद्यन्तामातोद्यानि ।

८ उभौ—भट्टा ! तह । [ भर्तः ! तथा । ]

९ वृद्धगोपालकः—भट्टा ! तुम्हे हल्लीसअं पकीळन्ति । अहं एत्थ किं करो-

---

दूसरे बस्तियों में जाकर बहुत खुश होकर हुम्भारशब्द से प्रतिनादित वृन्दावन में गा रहे हैं ॥३॥

१ वृद्धगोपालक—हाँ भर्ता । सब तैयार होकर ग्रा गए हैं ।

२ दामक—स्वामी की जय हो ।

३ संकर्षण—दामक, सब ग्वाल बच्चे ग्रा गए हैं ?

४ दामक—हाँ, सब तैयार होकर ग्रा गए हैं।

५ दामोदर—घोषसुन्दरी वनमाला चन्द्ररेखा, मृगाक्षी ग्राप सब भीर बस्तियों के ग्रनुरूप हल्लीसक नृत्य को ग्रारम्भ करो ।

६ सब—जैसे भर्ता ग्राज्ञा देता है ।

७ संकर्षण—दामक, मेघनाद, नगाड़े बजाग्रो ।

८ दोनो—भर्ता, जैसे ग्रापकी ग्राज्ञा ।

९ वृद्धगोपालक—भर्ता, तुम सब हल्लीसक नृत्त करोगे भला, मैं क्या करूँगा ।

* जागरि ( मा ? ता ), पामे॰ ।

मि । [ भर्तः ! यूयं हल्लीसकं प्रक्रीडथ । अहमत्र किं करोमि । ]

१० दामोदरः—प्रेक्षको भवान् ननु ।

११ वृद्धगोपालकः—भट्टा ! तह । [ भर्तः ! तथा । ]

१२ ( सर्वे नृत्यन्ति । )

१३ वृद्धगोपालकः—ही ही पुट्ठु ईदं । पुट्ठु वाइदं । पुट्ठु णच्चिदं । जाव अहं वि णच्चेमि । परिस्सन्तो खु अहं । [ ही ही सुष्ठु गीतम् । सुष्ठु वादितम् । सुष्ठु नर्तितम् । यावदहमपि नृत्यामि । परिश्रान्तः खल्वहम् । ]

१४ ( प्रविश्य )

गोपालकः—हा हा भट्टा अवक्कमदु इमादो देसादो । [ हा हा भर्ता अपक्रामत्वस्मात् देशात् । ]

१५ दामोदरः—दामक ! किमसि सम्भ्रान्तः ।

१६ गोपालकः—एषो अळिट्ठवषभो णाम दाणवो पिण्डीकिदणिग्घादरूवो भूमिदळं खुरपुडेहि लिहन्तो, जष्ष घोषो मेघरवत्ति षङ्किदो जादो । [ एषोऽरिष्टवृषभो नाम दानवः पिण्डीकृतनिर्घातरूपो भूमितलं खुरपुटैर्लिखन् यस्य घोषो मेघरव इति शङ्कितो जातः । ]

१७ दामोदरः—एवं, प्राप्तोऽरिष्टर्षभः । इमा नो गोपदारिका दारकांश्च

---

१० दामोदर—आप देखें ।

११ वृद्धगोपालक—भर्ता, अच्छा ।

१२ ( सब नाचते हैं )

१३ वृद्धगोपालक—ही, ही, सुन्दर गया है । सुन्दर बजाया और सुन्दर नाच किया । मैं भी नाचता हूँ, मैं थक गया हूँ । ( प्रवेश करके )

१४ गोपालक—हा, हा, मर्ता इस स्थान से भाग चलो ।

१५ दामोदर—दामक, तुम क्यों घबराए हुए हो ।

१६ गोपालक—संहार की मूर्ति अरिष्टनेमि नामक दानव अपने खुर के अगले भाग से भूमि को खदेर रहा है । उसको रंभाने की आवाज़ गर्जन के समान है । इसलिए मैं डर गया हूँ ।

१७ दामोदर—अरिष्टर्षभ पहुँच गया है । इन ग्वालों की कुमारियों तथा कुमारों

गृहीत्वैतत् पर्वतशिखरमारुह्य दुरात्मनो मम च युद्धविशेषं पश्यत्वार्यः। अहमस्य दर्पप्रशमनं करोमि।

१८ ( सङ्कर्षणस्तैः सह निष्क्रान्तः )

१९ दामोदरः—एष एष दुरात्मारिष्टर्षभः।

कृत्वा खुरैर्भूमितलं प्रभिन्नं
श्रृङ्गैश्च कूलानि समाक्षिपंश्च।
भयार्तगोपैः प्रसमीक्ष्यमाणो
नदन् समाधावति गोवृषेन्द्रः॥ ४॥

१ ( ततः प्रविशत्यरिष्टर्षभः )

२ अरिष्टर्षभः—एष भोः!

श्रृङ्गाग्रकोटिकिरणैः खमिवालिखंश्च
शत्रोर्वधार्थमुपगम्य वृषस्य रूपम्।
वृन्दावने सललितं प्रतिगर्जमान-
माक्रम्य शत्रुमहमद्य सुखं चरामि॥५॥

---

को लेकर आप पर्वत शिखिर पर चढ़ जाएं। मेरी और इस दुरात्मा की लड़ाई देखें। मैं इसका अहंकार समाप्त किए देता हूँ।

१८ ( उनके साथ संकर्षण का प्रस्थान )

१९ दामोदर—यह दुरात्मा अरिष्टर्षभ पहुँच गया है।

वह अपने खुरों से जमीन को खुरेदता है। सींगों से नदी के तट को गिराता है। डरे हुए ग्वाले उसे बार-बार देखते हैं। वह गर्जता हुआ दौड़ता है॥४॥

१ ( अरिष्टर्षभ का प्रवेश )

२ अरिष्टर्षभ—अरे।

यह मैं पहुँच गया हूँ। मैंने अपने शत्रु के वध के लिए वृषभ का रूप धारण किया हुआ है। सींग के अगले भाग की किरणों से आकाश को खदेड़ता हुआ वृन्दावन में लीला के साथ गर्ज रहे शत्रु पर आक्रमण कर मैं आज सुख से चरूँगा॥५॥

हुङ्कारशब्देन ममेह घोषे स्रवन्ति गर्भा वनिताजनस्य ।
खुराग्रपातैर्लिखितार्धचन्द्रा प्रकम्पते सद्रुमकानना भूः ।।६।।

१ क नु खलु गतो नन्दगोपपुत्रः । भो नन्दगोपपुत्र ! क्वासि ।

२ दामोदरः—भो गोवृषाधम । इत इतः । एष स्थितोऽस्मि ।

३ अरिष्टर्षभः—( दृष्ट्वा ) अहो,

सारवान् खल्वयं बालो यो मां दृष्ट्वा महाबलम् ।
उग्ररूपं महानादं नैव भीतो न विस्मितः ।।७।।

दामोदरः—

किमेतद् भो ! भयं नाम भवतोऽद्य मया श्रुतम् ।
भीतानामभयं दातुं समुत्पन्नो महीतले ।।८।।

१ अरिष्टर्षभः—भो ! बालस्त्वम् । अतः खलु भयं न जानासि ।

२ दामोदरः—भो गोवृषाधम ! किं बाल इति मां प्रधर्षयसि ।

---

मेरे हुँकार शब्द से इस बस्ती में स्त्रियों के गर्भ गिर जाते हैं। खुर के अगले कोनों से अर्धचन्द्र को लिखती हुई पेड़ों और जंगल से व्याप्त भूमि काँप रही है ।।६।।

१ नन्दगोप का कुमार कहाँ गया है ? अरे नन्दगोप कुमार कहाँ हो ?

२ दामोदर—अरे दुष्ट बैल, इधर आओ, इधर आओ, मैं यह ठहरा हूँ ।

३ अरिष्टर्षभ—( देखकर ) अरे।

यह लड़का शक्तिमान् है जो मुझे बलवान् उग्ररूप तथा महानाद को देख कर न डरा है और न ही हैरान है ।।७।।

दामोदर—

अरे यह क्या भय का नाम आज ही मैंने तुम्हारे से सुना है। मैं इस पृथ्वी पर डरे हुओं को अभय देने के लिए पैदा हुआ हूँ ।८।।

१ अरिष्टर्षभ—अरे तूं बाल है, इसलिए तूं भय नहीं जानता ।

२ दामोदर—अरे नीच बैल, क्या मैं बाल हूँ ऐसा कर कर तूं मुझे तिरस्कृत करता है ।

किं दष्टः कृष्णसर्पेण बालेन न निहन्यते ।
बालेन हि पुरा क्रौञ्चः स्कन्देन निधनं गतः ॥९॥

१ भवितव्यम् ।

अपीदं शृणु मूर्ख ! त्वं कठिनोपलसञ्चयः ।
किं न पल्लवमात्रेण शैलो वज्रेण पातितः ॥१०॥

१ अरिष्टर्षभः—भो नन्दगोपपुत्र ! किं व्यवसितम् ।

२ दामोदरः—त्वां निधनमुपनेतुम् ।

३ अरिष्टर्षभः—समर्थो भवान् ?

४ दामोदरः—कः संशयः ।

५ अरिष्टर्षभः—तेन हि गृह्यतां स्वजातिसदृशं प्रहरणम् ।

६ दामोदरः—प्रहरणमिति । हं भोः !

गिरितटकठिनांसावेव बाहू ममैतौ
प्रहरणमपरं तु त्वादृशां दुर्बलानाम् ।

---

क्या बाल सर्प से कटा हुआ कोई व्यक्ति नहीं मरता। प्राचीनकाल में बालक स्कन्द से ही क्रौंच पर्वत मारा गया ॥९॥

१ अवश्य होगा ।

अरे मूर्ख पल्लव जैसे वज्र से कठोर पत्थर का संचय शैल क्या नहीं गिराया गया ॥१०॥

१ अरिष्टर्षभ- अरे नन्दगोप कुमार क्या सोचा है तू ने ?

२ दामोदर—तुम्हें मृत्यु के घाट उतारने के लिए ।

३ अरिष्टर्षभ— क्या तुम समर्थ हो ?

४ दामोदर—क्या संशय है ।

५ अरिष्टर्षभ—तो अपनी जाति के सदृश शस्त्र अपने हाथ में ले लो ।

६ दामोदर—शस्त्र, हूँ, हूँ अरे ।

पहाड़ के तट की तरह कठिन मेरे दोनों कन्धे ही बाहू हैं । मेरे बाहू तेरे जैसे दुर्बलों के लिए तो दूसरे शस्त्र हैं ? यदि तू मेरे भुजादण्डों से चूर्णित

**अथ मम भुजदण्डैः पीडचमानश्च शीघ्रं**
**यदि न पतसि भूमौ नास्मि दामोदरोऽहम् ॥११॥**

१ अरिष्टर्षभः—तेन हि प्रवर्ततां युद्धम ।

२ दामोदरः—भो गोवृषाधम ! यदि ते शक्तिरस्ति, मां पादेनैकेन स्थितं स्थानात् कम्पय ।

३ अरिष्टर्षभः—कोऽत्र संशयः । ( *तथा कर्तुं चेष्टयित्वा मूर्छितः पतति* )

४ दामोदरः—भो गोवृष ! समाश्वसिहि समाश्वसिहि ! अनेन वीर्येण भवान् गर्वितः ।

५ अरिष्टर्षभः—( *आश्वस्य, आत्मगतम्* ) अहो दुष्प्रसह्योऽयं बालः ।

**रुद्रो वायं भवेच्छक्रो विष्णुर्वापि स्वयं भवेत् ।**
**अमिथ्या खलु मे तर्कः स एव पुरुषोत्तमः ॥१२॥**

१ आ,

**यत्र यत्र वयं जातास्तत्र तत्र त्रिलोकधृत् ।**
**दानवानां वधार्थाय वर्तते* मधुसूदनः ॥१३॥**

---

होकर जल्दी भूमि पर न गिरा तो मेरा नाम दामोदर नहीं ॥११॥

१ अरिष्टर्षभ—तो युद्ध शुरू हो जाए ।

२ दामोदर- अरे दुष्ट बैल, अगर तेरे में कुछ शक्ति है तो एक पैर से ठहरे हुए मुझे हिलाओ ।

३ अरिष्टर्षभ—यहाँ क्या शक है। *(वैसी चेष्टा करते हुए मूर्च्छित हो कर पृथ्वी पर गिर पड़ता है ।)*

४ दामोदर—अरे बैल, धैर्य कर, धैर्य कर, तू अपने वीर्य से गर्वित है ।

५ अरिष्टर्षभ—*(श्वास लेकर मन में)* इस बालक का सामना करना कठिन है ।

**यह रुद्र है ? अथवा इन्द्र है ? अथवा विष्णु ही पैदा हुआ है । मेरे तर्क मिथ्या नहीं है । यह तो साक्षात् भगवान् है ।।१२॥**

१ अरे ।

**जहाँ-जहाँ हम पैदा हुए हैं वहाँ वहाँ तीनों लोकों को धारण करने वाला तू पैदा हो गया है । यह राक्षसों के वध के लिए मधुसूदन अवतरित हुए हैं ॥१३॥**

---

*( मौवर्त्त ? संवृत्तो ) पामे·

१ भवतु। विष्णुना हतस्याप्यक्षयो लोको मे भविष्यति। तस्माद् युद्धं करिष्यामि ( *प्रकाशम्* ) भो नन्दगोपपुत्र ! पुनरपि जातो मे दर्पः।

२ दामोदरः—हम्। तिष्ठ तिष्ठेदानीम्।

**किं गर्जसे भुजगतो मम गोवृषेन्द्र !**
**पातप्रवृद्ध इव वार्षिककालमेघः।**
**एहि क्षिपामि धरणीतलमभ्युपेहि**
**वज्राहतस्तट इवाञ्जनपर्वतस्य ॥१४॥**

१ ( *तथा कृत्वा* ) एष एष दुरात्मारिष्टर्षभः,

**विसृतरुधिरधाराक्लिन्ननासास्यनेत्रं**
**चलितककुदवालः प्रस्फुरत्पादकर्ण.।**
**निपतति विगतात्मा भूतले वज्रभिन्नो**
**गिरिरिव शिखराग्रैर्गोवृषो दानवेन्द्रः ॥१५॥**

( *प्रविश्य* )

१

---

१ अच्छा विष्णु द्वारा मर कर भी मैं अमर हो जाऊँगा। इसलिए युद्ध करूँगा। (*सब के सामने*) अरे नन्दगोप के पुत्र, क्या फिर भी मेरा दर्प पैदा गया है।

२ दामोदर—अच्छा, ठहर, ठहर अब।

अरे गोवृषभराज, वर्षाकाल में उमड़ते रहे बादलों की तरह मेरी भुजाओं में पड़ा हुआ तू क्या गर्ज रहा है ? वैसे तू भी गिरा पड़ा है। यह देखो मैं तुम्हें भूमि पर फेंक रहा हूँ, जैसे काजल का पर्वत वज्र से प्रहार किया हुआ खण्ड-खण्ड हो जाता हैं ॥१४॥

१ (*वैसे करके*) यह दुरात्मा अरिष्टर्षभ है :

खून के बहने से उसकी नासिका, आँख और मुँह तर हो रहे हैं दूसरी ककुद चलने लगी है,पै र और कान फूट रहे हैं। वज्र से भिन्न शिखरहीन पिण्ड पर्वत की तरह मृत होकर पृथ्वी पर दानवेन्द्र यह बैल पड़ा हुआ है ॥१५॥

(*प्रवेश करके*)

१

२ दामकः—जेदु भट्टा। एषो भट्टा षङ्कळिषणो पव्वदादो जमुणाह्ळे काळिओ णाम महाणाओ उट्ठिदो त्ति पुणिअ तं पडिगओ। वाळेहि वाळेहि भट्टा ! षङ्कळिषणं [ जयतु भर्ता। एष भर्ता संकर्षणः पर्वताद् यमुनाह्लदे कालियो नाम महानाग उत्थित इति श्रुत्वा तं प्रतिगतः। वारय वारय भर्तः ! संकर्षणम्। ]

३ दामोदरः—कालियो नाम मयापि श्रूयते सदर्पः पन्नगपतिः। भवत्वहमस्य दर्पप्रशमनं करोमि।

गोब्राह्मणादयस्तेन सुजूष्यन्ते किल प्रजाः।
अद्यप्रभृति शान्तात्मा निष्प्रभः स भविष्यति ॥१६॥

१ ( निष्क्रान्तौ )

तृतीयोऽङ्कः।

---

२ दामक—भर्ता की जय हो। भर्ता संकर्षण, यमुना से एक कालिय नामक महानाग का नाम सुनकर उसकी तरफ गए हैं। भर्ता संकर्षण को हटाओ, हटाओ।

३ दामोदर—मैंने भी सर्पराज अहङ्कारी—कालिय का नाम सुना है।

मैं इसका दर्प शान्त करता हूँ वह गौ-ब्राह्मण को तंग करता है, आज से लेकर वह शान्त और निष्प्रभ हो जाएगा ॥१६॥

( प्रस्थान )

ततीय अंक समाप्त

## अथ चतुर्थोऽङ्कः ।

१ ( ततः प्रविशति दामोदरः )

दामोदरः—

एता मत्तचकोरशावनयनाः प्रोद्भिन्नकम्रस्तनाः
कान्ताः प्रस्फुरिताधरोष्ठरुचयो विस्रस्तकेशस्रजः ।
सम्भ्रान्ता गलितोत्तरीयवसनास्त्रासाकुलव्याहृता-
स्त्रस्ता मामनुयान्ति पन्नगपतिं दृष्टेव गोपाङ्गनाः ॥१॥

१ ( ततः प्रविशन्ति गोपकन्यकाः )

२ सर्वाः—मा खु मा खु भट्टा ! एदं जळासअं पविसिदुं । एसो खु दुट्ठमहोरअकुळावासो । [ मा खलु मा खलु भर्तः ! एतं जलाशयं प्रवेष्टुम् । एष खलु दुष्टमहोरगकुलावासः । ]

३ दामोदरः—न खलु न खलु विषादः कार्यः पश्यन्तु भवत्यः ।

---

## चौथा अंक

१ ( दामोदर का प्रवेश )

दामोदर—

मस्त चकोरों के बच्चों की तरह नयन वाली, फूट कर बाहिर निकल रहे स्तनोंवाली, सुन्दर होठों से प्रस्फुट कान्तिवाली, विकीर्ण केशों में मालाएँ सजाए हुए और नीचे गिर रहे उत्तरीयवाली ग्वालिनें कालिय साँप को देख कर तथा डर कर मेरे पीछे आ रही हैं ॥१॥

१ (ग्वालों की कुमारियों का प्रवेश)

२ सब—भर्ता, ऐसे मत करना, ऐसे मत करना, इस जलाशय में मत प्रवेश करना । इस में बड़े साँप रहते है ।

३ दामोदर—चिन्ता नहीं करनी चाहिए । आप देखो ।

निष्पक्षिव्यालयूथं भयचकितकरिव्रातविप्रेक्षिताम्भो-
गम्भीरं स्निग्धनीरं ह्रदमुदधिनिभं क्षोभयन् सम्प्रविश्य ।
गोपीभिः शङ्किताभिः प्रियहितवचनैः पेशलैर्वार्यमाणः
कालिन्दीवासरक्तं भुजगमतिलं कालियं धर्षयामि ॥२॥

१ सर्वाः—भट्टा ! पङ्कळिषण ! वाळेहि वाळेहि भट्टिदामोदळं । [ भर्तः ! संकर्षण ! वारय वारय भर्तृदामोदरम् । ]

२ ( प्रविश्य )

३ सङ्कर्षणः—अलमलं भयविषादाभ्याम् । दर्शितोऽनुरागः । पश्यन्तु भवत्यः ।

विषदहनशिखाभिर्यन्मुखात् प्रोद्गताभिः
कपिशितमशिवाभिश्चक्रवालं दिशानाम् ।
सरभसमभियान्तं कृष्णमालक्ष्य शङ्की
नमयति शिरसान्तर्मण्डलं चण्डनागः ॥३॥

---

पक्षी और पशुओं के झुण्डों से रहित, जिसकी गहराई से हाथियों के समूह डरते और काँपते हैं, मैं समुद्र के समान इसके स्निग्ध जल में प्रवेश करके इसे क्षुब्ध करूँगा । यद्यपि मीठे और सुकुमार वचनों से शंकित गोपियाँ मुझे हटाएंगी तथापि मैं यमुना जल में रहने वाले कालिय साँप को जोर से उखाड़ूँगा ॥२॥

१ सब—भर्ता, संकर्षण, भर्ता दामोदर को हटाओ ।

२ ( प्रवेश करके )

३ संकर्षण—भय और विषाद को छोड़ दो । तुमने अनुराग दिखला दिया है । तुम देखो :

दिशाओं का चक्रवाल मुँह से निकल रही नाशक तथा अमाङ्गलिक विष के समान भस्म करने वाली शिखाओं से लाल हो रहा है । शंका से भरा हुआ यह प्रचण्ड कालिय नाग वेग से कृष्ण को आते हुए देखकर सिर के मण्डल को झुका लेता है ॥३॥

